# ॥ श्री गजेंद्रमोक्ष स्तोत्रं ॥

**श्रीगजेंद्र उवाच**

ओं नमो भगवते तस्मै यत एतच्चिदात्मकं ।
पुरुषायादिबीजाय परेशायाभिधीमहि ॥ १ ॥

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयं ।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवं ॥ २ ॥

यः स्वात्मनीदं निजमाययार्पितं
क्वचिद्विभातं क्व च तत्तिरोहितं ।
अविद्धदृक्साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः ॥ ३ ॥

कालेन पंचत्वमितेषु कृत्स्नशो
लोकेषु पालेषु च सर्वहेतुषु ।
तमस्तदासीद्गहनं गभीरं
यस्तस्य पारेऽभिविराजते विभुः ॥ ४ ॥

न यस्य देवा ऋषयः पदं विदु–
र्जंतुः पुनः कोऽर्हति गंतुमीरितुं ।
यथा नटस्याकृतिभिर्विचेष्टतो
दुरत्ययानुक्रमणः स मावतु ॥ ५ ॥

दिदृक्षवो यस्य पदं सुमंगलं
विमुक्तसंगा मुनयः सुसाधवः ।
चरंत्यलोकव्रतमव्रणं वने
भूतात्मभूताः सुहृदः स मे गतिः ॥ ६ ॥

न विद्यते यस्य च जन्म कर्म वा
न नामरूपे गुणदोष एव वा ।
तथापि लोकाप्ययसंभवाय यः
स्वमायया तान्यनुकालमृच्छति ॥ ७ ॥

तस्मै नमः परेशाय ब्रह्मणेऽनंतशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ८ ॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ ९ ॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ १० ॥

नमः शांताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ ११ ॥

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १२ ॥

सर्वेंद्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असता च्छाययोक्ताय सदाभासाय ते नमः ॥ १३ ॥

नमो नमस्तेऽखिलकारणाय
निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नायमहार्णवाय
नमोऽपवर्गाय परायणाय ॥ १५ ॥

गुणारणिच्छन्नचिदुष्मपाय
तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागम
स्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥

मादृक्प्रपन्नपशुपाशविमोक्षणाय
मुक्ताय भूरिकरुणाय नमोऽलयाय ।
स्वांशेन सर्वतनुभृन्मनसि प्रतीत
प्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥

आत्मात्मजाप्तगृहवित्तजनेषु सक्तै–
र्दुष्प्रापणाय गुणसंगविवर्जिताय ।
मुक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥

यं धर्मकामार्थविमुक्तिकामा
भजंत इष्टां गतिमाप्नुवंति ।
किं चाशिषो रात्यपि देहमव्ययं
करोतु मेऽदभ्रदयो विमोक्षणं ॥ १९ ॥

एकांतिनो यस्य न कंचनार्थं
वांछंति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमंगलं
गायंत आनंदसमुद्रमग्नाः ॥ २० ॥

तमक्षरं ब्रह्म परं परेश–
मव्यक्तमाध्यात्मिकयोगगम्यं ।
अतींद्रियं सूक्ष्ममिवातिदूर–
मनंतमाद्यं परिपूर्णमीडे ॥ २१ ॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २२ ॥

यथार्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यांति संयांत्यसकृत्स्वरोचिषः ।
तथा यतोऽयं गुणसंप्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः ॥ २३ ॥

स वै न देवासुरमर्त्यतिर्यङ्ग
स्त्री न षंढो न पुमान्न जंतुः ।
नायं गुणः कर्म न सन्न चास–
न्निषेधशेषो जयतादशेषः ॥ २४ ॥

जिजीविषे नाहमिहामुया कि–
मंतर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लव–
स्तस्यात्मलोकावरणस्य मोक्षं ॥ २५ ॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसं ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदं ॥ २६ ॥

योगरंधितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यंति योगेशं तं नतोऽस्म्यहं ॥ २७ ॥

नमो नमस्तुभ्यमसह्यवेग
शक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरंतशक्तये
कदिंद्रियाणामनवाप्यवर्त्मने ॥ २८ ॥

नायं वेद स्वमात्मानं यच्छक्त्याहं धिया हतं ।
तं दुरत्ययमाहात्म्यं भगवंतमितोऽस्म्यहं ॥ २९ ॥

॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे तृतीयेऽध्याये श्री गजेंद्रकृत भगवत्स्तोत्रं संपूर्णं ॥